२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ स्नेहपाचितैः स्नेहसंयुक्तैः ४३ । ४४ ॥ इतिस्त्रीपर्वणिनीलकंठीये भा० षड्विंशोऽध्यायः ॥ २६ ॥ ॥

चंदनागुरुकाष्ठानितथाकालीयकान्युत ॥ घृतंतैलंचगंधांश्चक्षौमाणिवसनानिच २८ समाहृत्यमहार्हाणिदारूणांचैवसंचयान् ॥ रथांश्चमृदितांस्तत्रनानाप्रहरणानिच २९ चिताःकृत्वाप्रयत्नेनयथामुख्यान्नराधिपान् ॥ दाहयामासुरव्यग्राःशास्त्रदृष्टेनकर्मणा ३० दुर्योधनंचराजानंभ्रातॄंश्चास्यशताधिकान् ॥ शल्यंशलंचराजानंभूरिश्रवसमेवच ३१ जयद्रथंचराजानमभिमन्युंचभारत ॥ दौःशासनिंलक्ष्मणंचधृष्टकेतुंचपार्थिवम् ३२ बृहंतंसोमदत्तंचसृंजयांश्चशताधिकान् ॥ राजानंक्षेमधन्वानंविराटद्रुपदौतथा ३३ शिखंडिनंचपांचाल्यंधृष्टद्युम्नंचपार्षतम् ॥ युधामन्युंचविक्रांतमुत्तमौजसमेवच ३४ कौसल्यंद्रौपदेयांश्चशकुनिंचापिसौबलम् ॥ अचलंवृषकंचैवभगदत्तंचपार्थिवम् ३५ कर्णंवैकर्तनंचैवसहपुत्रममर्षणम् ॥ केकयांश्चमहेष्वासांस्त्रिगर्तांश्चमहारथान् ३६ घटोत्कचंराक्षसेन्द्रंबकभ्रातरमेवच ॥ अलंबुषंराक्षसेन्द्रंजलसंधंचपार्थिवम् ३७ एतांश्चान्यांश्चसुबहून्पार्थिवांश्चसहस्रशः ॥ घृतधाराहुतैर्दीप्तैःपावकैःसमदाहयन् ३८ पितृमेधाश्चकेषांचित्प्रावर्तंतमहात्मनाम् ॥ सामभिश्चाप्यगायंततेऽन्वशोचंतचापरैः ३९ साम्नामृचांचनादेनस्त्रीणांचरुदितस्वनैः ॥ कश्मलंसर्वभूतानांनिशायांसमपद्यत ४० तेविधूमाःप्रदीप्ताश्चदीप्यमानाश्चपावकाः ॥ नभसीवान्वदृश्यंतग्रहास्तन्वभ्रसंवृताः ४१ येचाप्यनाथास्तत्रासन्नानादेशसमागताः ॥ तांश्चसर्वान्समानाय्यराशीन्कृत्वासहस्रशः ४२ चित्वादारुभिरव्यग्रैःप्रभूतैःस्नेहपाचितैः ॥ दाहयामासतान्सर्वान्विदुरोराजशासनात् ४३ कारयित्वाक्रियास्तेषांकुरुराजोयुधिष्ठिरः ॥ धृतराष्ट्रंपुरस्कृत्यगंगामभिमुखोऽगमत् ४४ ॥ इतिश्रीमहाभा० स्त्री० श्राद्धपर्वणिकुरूणामौर्ध्वदेहिकेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ वैशंपायनउवाच ॥ तेसमासाद्यगंगांतुशिवांपुण्यजलोचिताम् ॥ ह्रदिनींचप्रसन्नांचमहारूपांमहाबलाम् १ भूषणान्युत्तरीयाणिवेष्टनान्यवमुच्यच ॥ ततःपितॄणांभ्रातॄणांपौत्राणांस्वजनस्यच २ पुत्राणामार्यकाणांचपतीनांचकुरुस्त्रियः ॥ उदकंचक्रिरेसर्वारुदत्योभृशदुःखिताः ३ सुहृदांचापिधर्मज्ञाःप्रचक्रुःसलिलक्रियाः ॥ उदकेक्रियमाणेतुवीराणांवीरपत्निभिः ४ सूपतीर्थाभवद्गंगाभूयोविप्रससारच ॥ तन्महोदधिसंकाशंनिरानंदमनुत्सवम् ५ वीरपत्नीभिराकीर्णंगंगातीरमशोभत ॥ ततःकुंतीमहाराजसहसाशोककर्शिता ६ रुदतीमंदयावाचापुत्रान्वचनमब्रवीत् ॥ यःसवीरोमहेष्वासोरथयूथपयूथपः ७ अर्जुनेनजितःसंख्येवीरलक्षणलक्षितः ॥ यंसूतपुत्रंमन्यध्वंराधेयमितिपांडवाः ८ योव्यराजच्चमूमध्येदिवाकरइवप्रभुः ॥ प्रत्ययुध्यतवःसर्वान्पुरायःसपदानुगान् ९ दुर्योधनबलंसर्वंयःप्रकर्षन्व्यरोचत ॥ यस्यनास्तिसमोवीर्येपृथिव्यामपिपार्थिवः १० योऽवृणीतयशःशूरःप्राणैरपिसदाभुवि ॥ कर्णस्यसत्यसंधस्यसंग्रामेष्वपलायिनः ११ ॥ ॥ ॥ ॥

तेसमासाद्येति १. वेष्टनानिउष्णीषकटिबंधनादीनि २ । ३ । ४ सूपतीर्था शोभनजलावतरणमार्गा ५ । ६ । ७ । ८ । ९ । १० । ११. ॥ ॥ ॥

१२ । १३ भवन्अभवन् अडभावआर्षः १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ - नेहस्मेति कर्णेभ्रातृत्वेनज्ञातेसतितदनुसारिणामस्माकमपिदुर्लभंनाभविष्यदपिकौर

कुरुध्वमुदकंतस्यभ्रातुरक्लिष्टकर्मणः ॥ सहिवः पूर्वजोभ्राताभास्करान्मय्यजायत १२ कुंडलीकवचीशूरोदिवाकरसमप्रभः ॥ श्रुत्वातुपांडवाःसर्वेमातुर्वचनमप्रियम् १३ कर्णमेवानुशोचंतोभूयःक्लांततराऽभवन् ॥ ततःसपुरुषव्याघ्रःकुंतीपुत्रोयुधिष्ठिरः १४ उवाचमातरंवीरोनिःश्वसन्निवपन्नगः ॥ यःशरोर्मिर्ध्वजावर्तोमहाभुजमहाग्रहः १५ तलशब्दानुनदितोमहारथमहाह्रदः ॥ यस्येषुपातमासाद्यनान्यस्तिष्ठेद्धनंजयात् १६ कथंपुत्रोभवत्याःसदेवगर्भःपुराऽभवत् ॥ यस्यबाहुप्रतापेनतापिताःसर्वतोवयम् १७ तमग्निमिववस्त्रेणकथंछादितवत्यसि ॥ यस्यबाहुबलंनित्यंधार्तराष्ट्रैरुपासितम् १८ उपासितंयथाऽस्माभिर्बलंगांडीवधन्वनः ॥ भूमिपानांचसर्वेषांबलंबलवतांवरः १९ नान्यंकुंतीसुतात्कर्णादगृह्णाद्रथिनांरथी ॥ सनःप्रथमजोभ्रातासर्वशस्त्रभृतांवरः २० असूततंभवत्यग्रेकथमद्भुतविक्रमम् ॥ अहोभवत्यामंत्रस्यगूहनेनवयंहताः २१ निधनेनहिकर्णस्यपीडितास्तुसबांधवाः ॥ अभिमन्योर्विनाशेनद्रौपदेयवधेनच २२ पंचालानांविनाशेनकुरूणांपतनेनच ॥ ततःशतगुणंदुःखमिदंमामस्पृशद्भृशम् २३ कर्णमेवानुशोचामिदह्याम्यग्नाविवाहितः ॥ नेहस्मकिंचिदप्राप्यंभवेदपिदिविस्थितम् २४ नचेदंवैशसंघोरंकौरवांतकरंभवेत् ॥ एवंविलप्यबहुलंधर्मराजोयुधिष्ठिरः २५ व्यरुदच्छनकैराजंश्चकारास्योदकंप्रभुः ॥ ततोविनेदुःसहसास्त्रियस्ताःखलुसर्वशः २६ अभितोयास्थितास्तत्रतस्मिन्नुदककर्मणि ॥ ततआनाययामासकर्णस्यसपरिच्छदाः २७ स्त्रियःकुरुपतिर्धीमान्भ्रातुःप्रेम्णायुधिष्ठिरः ॥ सताभिःसहधर्मात्माप्रेतकृत्यमनंतरम् २८ चकारविधिवद्धीमान्धर्मराजोयुधिष्ठिरः ॥ पापेनासौमयाश्रेष्ठोभ्राताज्ञातिर्निपातितः २९ अतोमनसियद्गुह्यंस्त्रीणांतन्नभविष्यति ॥ इत्युक्त्वासतुगंगायाउत्तताराकुलेंद्रियः ॥ भ्रातृभिःसहितःसर्वैर्गंगातीरमुपेयिवान् ३० ॥ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांस्त्रीपर्वणिकर्णगूढजत्वकथनेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥ ॥ समाप्तमिदंस्त्रीपर्व ॥ अतःपरंशांतिपर्वभविष्यति ॥ तस्यायमाद्यःश्लोकः ॥ ॥ वैशंपायनउवाच ॥ कृतोदकास्तेसुहृदांसर्वेषांपांडुनंदनाः ॥ विदुरोधृतराष्ट्रश्चसर्वाश्चभरतस्त्रियः ॥ १ ॥ ॥ ॥ ॥ ॥

वाणांक्षयोऽभविष्यदित्यर्थः २४ । २५ । २६ । २७ । २८ । २९ । ३० इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायां वैयासिक्यांश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोःश्रीनीलकंठीयेभारतभावदीपे स्त्रीपर्वार्थप्रकाशे सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

